विरुद्धधर्मों का आश्रयगरूप उनका माहात्म्य बतलाते हैं—तद् = वह (परब्रह्म परमात्मा भगवान् श्रीपुरुषोत्तम ( भक्तों के अधीन होने के कारण )

एजति = उनके मनोरथानुरूप शरीर धारण करते हैं। ( स्वयं बन्धन और मोक्ष के दाता होते हुए भी यशोदा की रस्सी में बँध जाते हैं। शरणद होते हुए भी दुर्वासा को शरण नहीं देते। सत्यप्रतिज्ञ होते हुए भी कौरवों के संग्राम में रथ का चक्र उठालेते हैं। जगत् के राजाओं के महाराज होते हुए भी नवनीत की चोरी करते हैं। (और) भक्तों के इच्छानुरूप शरीर से अवतीर्ण होनेवाले

तद् उ = वही भगवान् श्रीपुरुषोत्तम ( विरुद्ध धर्मों के आश्रय होने के कारण )

न एजति = अपने स्वरूप से विचलित नहीं होते

तद् = वह ( भगवान् श्रीपुरुषोत्तम )

( "विदूरकाष्ठाय मुहुः कुयोगिनाम्" इस वचन के अनुसार )

दूरे = ( अभक्तों से ) दूर हैं ( तथा )

तद् उ = वही श्रीपुरुषोत्तम

( "विसृजति हृदयं न यस्य साक्षात्" इस वचन के अनुसार )

अन्तिके = (भक्तों के) समीप हैं।

तद् = वह भगवान्

अस्य = इस

सर्वस्य = सब जगत् के

अन्तः = भीतर प्रविष्ट हैं

( और )

तद् उ = वही भगवान् श्रीपुरुषोत्तम

अस्य = इस

सर्वस्य = समस्त जगत् के

बाह्यतः = बाहर हैं।

( यह जगत् सर्वथा नित्य ब्रह्म से ओतप्रोत है इसलिये नित्य है, तथा भगवान् का विरुद्धधर्माश्रयण उनके अचिन्त्यशक्तिमान होने के कारण उनकी इच्छा शक्ति के आधीन है, ऐसा जानना चाहिए।) ॥५॥

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं ततो न विचिकित्सति (विजुगुप्सते)॥६॥**

विरुद्धधर्माश्रयत्वभावनात् सकलसंशयोच्छेदं कण्ठरवेणाह—यः कश्चिद् भाग्यवान् प्रभोः कृपापात्रं **सर्वाण्या**-ब्रह्मस्तम्बपर्यन्तानि भूतानि ब्रह्मण्ये**वानुपश्यति**, सुवर्णे कटककुण्डलादिवदनुभवति, सर्वभूतेषु स्थावरजङ्गमेषु चात्मानं ब्रह्म कनककुण्डलादिषु सुवर्णवदनुभवति—स **ततो** विरुद्धधर्माश्रयत्वभावनाद्धेतोर्**न विचिकित्सति** प्रभुस्वरूपे न संशेत इत्यर्थः। "न विजुगुप्सते" इति पाठान्तरे तु ततः सर्वभूतेभ्यो न विजुगुप्सते घृणां न करोतीत्यर्थः। सर्वस्यापि नित्यरम्यशुद्धब्रह्मोपादानकत्वेन विजुगुप्साप्रयोजकभ्रमात्मकानित्यत्वारम्यत्वाशुद्धत्वादेरप्रसंगात्। तादृशानां भावनावतां विरलत्वद्योतकः शब्द'स्तु'रिति विभावनीयम्। आत्मशब्दस्य जीवपरत्वेन व्याख्याने "यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति" इति भगवद्वाक्यविरोधोऽपरिहार्यः स्यात्॥ ६॥

## भाषा

परब्रह्म परमात्मा भगवान् श्रीपुरुषोत्तम विरुद्ध धर्मों के आधार हैं इस प्रकार की भावना से पुरुष के समस्त संशय उच्छिन्न हो जाते हैं—इस बात को जोर देकर कहते हैं—

यस्तु = जो कोई (परम भाग्यवान् प्रभु का कृपापात्र)
सर्वाणि = ब्रह्म से लेकर स्तम्ब ( तृणगुच्छ ) पर्यन्त समस्त
भूतानि = प्राणियों को ( सुवर्ण में कङ्कण-कुण्डलकी तरह )
आत्मनि = भगवान् श्रीपुरुषोत्तम में

एव = ही ( व्याप्त )

अनुपश्यति = देखता है

च = तथा

सर्वभूतेषु = सब स्थावर-जङ्गमात्मक प्राणियों में

आत्मानं = श्रीपुरुषोत्तम को ( व्याप्त )

देखता है।

स = वह

ततः = भगवान् विरुद्धधर्माश्रय हैं इस भावना के कारण ( प्रभुके स्वरूप में )

न विचिकित्सति = संदेह नहीं करता।

( न विजुगुप्सते ) = किसी भी प्राणी से घृणा नहीं करता। )

नित्य रम्य एवं शुद्ध ब्रह्म ही समस्त जगत् का उपादान कारण है। इसलिये घृणा के कारण भ्रमरूप अनित्यता अमनोहरता और अशुद्धता को वहां अवसर ही नहीं है। किन्तु जिनको ब्रह्मविषयक अनित्यता अमनोहरता एवं अशुद्धता की भावना नहीं है, वे थोड़े हैं। 'तु' शब्द इसी बात का द्योतक है।

जो कोई आचार्य आत्मशब्द का जीवविषयक व्याख्यान करते हैं उनके यहां

"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति"

इस भगवद्गीता के वाक्य के साथ होनेवाला विरोध नहीं हटाया जा सकता ॥ ६ ॥

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥**

पूर्वोक्तभावनाजनिततद्विषयकसकलसंशयनिरासाव्यवहितोत्तरकालिकतदिदृक्षाकातरत्वलक्षणविरहानुभवात्मकावस्थाविशेषस्य मोहादिनिवर्तकत्वमुखेन परमोपादेयत्वमाह—

**विजानतः** भगवद्विषयकविशिष्टज्ञानवतो जनस्य । ज्ञाने वैशिष्ट्यञ्च निर्दोषपूर्णगुणविग्रहत्त्वप्रकारकरूपमिति बोध्यम् । **यस्मिन्** विरहात्मकानुभवावस्थाविशेषे । **सर्वाणि भूतानि** स्थावरजङ्गमानि **आत्मैवाभूत्** आविर्भवद्भावात्मकपूर्णानन्दात्मकानि भवन्तीत्यर्थः । **तत्र** तस्मिन्नवस्थाविशेष एकत्वं शुद्धमद्वैतम**नुपश्यतो**ऽनुभवतो जनस्य को मोहः कश्च शोकः, न कोऽपीत्यर्थः । भक्तानां विरहदशायां मोहशोकादिविनिवृत्तिपूर्वकसर्वात्मभावो

'लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ।'

इत्यादिषु समाधिभाषोक्तप्रकरणेष्वतिरोहित इति नैपुण्येन विचारणीयम् ॥७॥

## भाषा

मनुष्य जब यह जान लेता है कि भगवान् विरुद्धधर्माश्रय हैं, तो उसके भगवद्विषयक सभी संशय उच्छिन्न हो जाते हैं और उसको तत्क्षण ही भगवान् के दर्शनों की इच्छारूप कातरता उत्पन्न होती है, जो भगवद्विरह का एक अवस्थाविशेष है, वह अवस्था मोहादि की निवर्तक होने के कारण अत्यन्त उपादेय मानी गई है । उस उपादेयता का इस मंत्र में वर्णन है—

**विजानतः**=भगवद्विषयक विशिष्ट ज्ञानवान् पुरुष को ( भगवान् निर्दोष, पूर्ण एवं सगुण शरीर को धारण करते हैं, इस प्रकार जानना ज्ञान की विशिष्टता है )।

**यस्मिन्**=जिस विरहानुभवरूप अवस्थाविशेष में

**सर्वाणि भूतानि**=सब स्थावर जंगम प्राणी

**आत्मा एव**=पूर्ण आनन्दमय परमात्मरूप ही

**अभूत्**=दिखलाई देते हैं ।

**तत्र**=उस अवस्था में

एकत्वम्=शुद्ध अद्वैत का

अनुपश्यतः=अनुभव करनेवाले पुरुष के लिये

को मोहः=क्या मोह ( और )

कः शोकः=क्या शोक है। अर्थात् शोक मोह कुछ भी नहीं है।

( व्रजभक्तों ने भी भगवान् की विरहदशा में केवल उनकी आनन्दमय लीलाओं का अनुकरण किया था, जैसा कि "लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः।" श्रीमद्भागवत के इस वचन से अच्छी तरह जाना जाता है ) ॥ ७ ॥

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्
व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

विरहे तत्साक्षात्काररूपानुभवं विवृणोति—

स पूर्वोक्तो विरहानुभवी। शुक्रं वीर्यवन्तं तादृशभक्तकृतस्य विषयकभोगे परमौदार्येण शक्तम्। अकायमप्राकृतशरीरमानन्दमयविग्रहमित्यर्थः। अव्रणं लौकिकसच्छिद्रत्वविकारदेहरहितम्। निर्दोषपूर्णगुणविग्रहमिति यावत्। अस्नाविरमप्राकृतशरीरत्वाद्रुधिरसंचारार्थं नाड्यादिरहितम्। शुद्धं मायासम्बन्धरहितम्।

"मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः"

इत्युक्तेः। अपापविद्धमविहिताचरणेऽपि तज्जन्यदुरदृष्टासंबद्धम्। ईश्वरस्य सर्वं कर्तुमकर्तुमन्यथाकर्तुं च शक्तत्वात्। पर्यगात् प्राप्तवान्। सर्वभावेन भजत इति भावः। तादृशस्य भक्तस्य स्वरूपमाह— कविरित्यादि। कविर्भगवद्गुणवर्णनक्षमः। मनीषी तत्प्रवणमनस्कः। परिभूस्तदर्थोज्झितलोकवेदः। स्वयंभूः प्राकृत-

शरीरादिशून्यतया स्वेच्छामयविग्रहवत्त्वेन भूतादिनिरपेक्ष तत्तल्ली-लोपयोगिसर्वभवनसामर्थ्यसहितः। **शाश्वतीभ्यः समाभ्यः**, पञ्च-म्या ल्यब्लोपप्रयोज्यत्वात्, नैरन्तर्यविशिष्टसंवत्सरानाश्रित्येत्यर्थः। संवत्सरेषु नैरन्तर्यविशिष्टत्वं चोत्तमश्लोकवार्ताविरहितक्षणकत्वा-भाववत्त्वरूपमिति बोध्यम्। **अर्थान्** धर्मार्थकाममोक्षाख्यान् पुरुषार्थान्। **याथातथ्यतो व्यदधात्** विदधाति। तेषु भगवद्विष-यकत्वेन परमपुरुषार्थत्वसम्पादनं हि याथातथ्यम्। तच्च बृहच्चतुः श्लोकीतोऽवगन्तव्यम्।

यदि तु **अकाय**मितिपदेन सर्वथा कार्यनिषेधः श्रुत्यभिमतः स्यात्तदाऽव्रणमस्नाविरमितिपदद्वयं न ब्रूयात्। कायनिषेधेनैव व्रणस्नाविरनिषेधलाभात्। अतो व्रणस्नाविरादिरहितमानन्दमय-विग्रहवत्त्वं भगवतः श्रुत्यभिमतम्। एवञ्च प्रकरणशुद्धौ व्या-ख्यानसामञ्जस्ये लिङ्गव्यत्ययकल्पनाऽनवकाशमापद्यते इत्यलम्॥८॥

**भाषा**

भगवान् के विरह में भगवत्साक्षात्कारप्राप्ति का स्वरूप इस मन्त्र में बतलाते हैं—

( पूर्वोक्त भगवद्विरह का अनुभव करने वाला )

**सः**=वह श्रीपुरुषोत्तम का भक्त

**शुक्रम्**=वीर्यवान ( भगवद्विरहानुभवी भक्त द्वारा किये गये भगवद्विषयक भोग में अत्यन्त उदारता से आसक्त )

**अकायम्**=प्राकृत शरीर से रहित ( आनन्दमात्रशरीरसम्पन्न )

**अव्रणम्**=लौकिक सच्छिद्र सविकार शरीर से रहित अर्थात् निर्दोष, पूर्ण, सगुण शरीर से युक्त

**अस्नाविरम्**=अप्राकृत शरीर होने के कारण रुधिरसंचार करने-वाली नाडी आदि से रहित

**शुद्धम्**="मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः" इस वचन

के अनुसार माया के सम्बन्ध से शून्य

अपापविद्धम्=करने, न करने और अन्यथा करने में समर्थ होनेके कारण अविहित आचरणों के होने पर भी उससे उत्पन्न कर्मफल से असंबद्ध ( उस परब्रह्म परमात्मा श्रीपुरुषोत्तम ) को

पर्यगात्=प्राप्त हो गया अर्थात् सब प्रकार से परिचर्या करता है। ( अतः ) वह भक्त

कविः=कवि ( भगवद्गुणवर्णन में समर्थ )

मनीषी=भगवान् में मन लगानेवाला

परिभूः=भगवदर्थ लोकवेद का त्याग करनेवाला है ( एवं )

स्वयंभूः=प्राकृत शरीरादि से रहित होने के कारण भूतों ( पृथ्वी जलादि) के विना ही स्वेच्छामय तथा तत्तत् लीलाओं के उपयुक्त सर्वरूप होने के सामर्थ्य से युक्त ( उसने )

शाश्वतीभ्यः=नैरन्तर्य विशिष्ट

( जिनका एक भी क्षण उत्तमश्लोक भगवान श्री पुरुषोत्तम की कथाओं से शून्य नहीं है वही संवत्सर नैरन्तर्य विशिष्ट हैं ऐसे )

समाभ्यः=बहुत वर्षों तक

अर्थान्=धर्म, अर्थ काम, मोक्ष रूपी चतुर्वर्ग को

याथातथ्यतः=भगवद्विषयक होने के कारण यथार्थ रूप में

व्यदधात्=विधान किया।

( जैसा कि वृत्रचतुः श्लोकी से जाना जाता है )

( यदि "अकायम्" इस पद के मन्त्र में रखने से सर्वथा उसकी काया ( शरीर ) का अभाव बतलाना ही श्रुति का अभिमत होता तो "अव्रणम्" तथा "अस्नाविरं" इन दोनों पदों को इस मन्त्र में रखने की आवश्यकता नहीं थी। काय के निषेध में ही व्रण एवं स्नायु का निषेध हो जाता। किन्तु वैसा न करके उन पदों के उपन्यास से यह सिद्ध है, कि भगवद्विग्रह को आनन्दमय बतलाना ही श्रुति का अभिमत है। इस

प्रकार प्रकरण की शुद्धि होते हुए व्याख्यान सामञ्जस्य हो जाने पर लिङ्गव्यत्यय की कल्पना को अवकाश ही नहीं रहता है। )॥८॥

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।**
**ततो भूय इव ते तमो य उ विद्यायां रताः॥ ९॥**

इयता प्रघट्टकेन पुष्टिपथिकस्य साधनावस्थामारभ्य सिद्धावस्थासमधिगतं सर्वात्मभावमुपदिश्य भक्तिविरहितज्ञानस्य बलवत्तरानिष्टप्रयोजकत्वमुपदेष्टुं प्रागुक्तमपि कर्मणामभगवत्प्रीत्यर्थानां बलवदनिष्टप्रयोजकत्वमनुवदति तारतम्यप्रतिपत्तये—

**ये** तत्तत्फलार्थिनो भगवद्गुणानुवादादिरहिताः। **अविद्याम**भगवत्प्रीत्यर्थकत्वेन बन्धनात्मकं कर्म **उपासते** अनुतिष्ठन्ति। **ते अन्धं तमः**भगवन्माहात्म्याज्ञानात्मिकामहन्त्वममत्वरूपां संसृतिम्—**प्रविशन्ति**—जन्ममरणपरम्परामनुभवन्तः क्रमेणोपयेधो गच्छन्तस्तामेव स्थितिं लभन्ते। अथोपदिदिक्षितमाह-**तत** इत्यादिना। **ये विद्यायाम्** ब्रह्मज्ञाने। **उ** एव। **रता**स्तल्लब्धये क्लिश्यमानाः, नतु भक्तिसहकृतायां तस्यामित्युपदस्वारस्यम्। **ते** विमुक्तमानिनः। **ततः** पूर्वोक्तात् कर्मजडजनसुलभादन्धतमसाद्, **भूय इव** प्रचुरमेव। एवार्थ इवकारः। **तमो** मोहं प्रविशन्तीति शेषः। तमसि भूयस्त्वन्तु भगवच्चरणानादरणकारणकत्वेन कथञ्चिल्लब्धादपि लब्धव्याद्विभ्रंशकत्वमिति ध्येयम्। भगवन्माहात्म्याज्ञानरूपस्य तमसो भगवन्माहात्म्योपदेशश्रवणादिना निवर्त्यत्वाद्—भगवच्चरणानादरणस्य तु दृढदुराग्रहमूलकतयाऽनिवर्त्यत्वेन तत्प्रयुक्तस्य तमसोऽप्यनिवर्त्यत्वाद् भूयस्त्वम्— तदुक्तं ब्रह्मादिभिर्भागवते—

"येऽन्येऽरविन्दाक्ष! विमुक्तमानिन-
स्त्वय्यस्तभावादविशुद्धबुद्धयः।

आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ इति

अथवा तमसि भूयस्त्वं नाम लब्धव्यराहित्येन मृगतृष्णायामिवाविरतानन्तप्रयासविशिष्टविभ्रंशप्रयोजकत्वमितिबोध्यम् । अतएव 'भूय इवे'तीवशब्दोऽपि सार्थकः । अन्धतमसस्य फलभोगानन्तरनिवर्त्यत्वात् अस्य प्रयासस्य तु भ्रान्तिजनितत्वेन शाश्वतत्वाद् भूयस्त्वम् । तथा च

'श्रेयः स्रुतिं भक्तिमुदस्य ते विभो !
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद् यथा स्थूलतुषावघातिनाम् ॥

इति ब्रह्मस्तुतिः समर्थिता भवतीति दिक् ॥ ९ ॥

## भाषा

इतने प्रकरण से पुष्टिमार्ग के पथिक को उपदेश देने की इच्छा से इसकी प्रवेशावस्था से लेकर विरह में भावस्वरूप भगवान् श्रीपुरुषोत्तम की प्राप्ति तक का अविकल रहस्य बताकर, भक्तिरहित ज्ञान अधिक अमंगल का जनक है, जैसा कि पहले बतलाया जा चुका है और भगवान की प्रीति के लिये न किये गये कर्म भी अधिक अनिष्ट पैदा करनेवाले हैं—यह बात इस मंत्र में बतलाते हैं—

ये=भगवद्गुणानुवाद से हीन और उन-उन फलों की चाहना करनेवाले जो प्राणी

अविद्याम्=भगवत्प्रीति के लिये न किये गये बन्धनरूप कर्मों का

उपासते=अनुष्ठान करते हैं

ते=वे

अन्धन्तमः=( जन्म और मरण की परम्परा का अनुभव करते हुए ) अन्धतम में

प्रविशन्ति = प्रवेश करते हैं। क्रमशः ऊपर नीचे जाते जाते हुए अन्धतम में पहुँचते हैं। (तथा)

ये = जो लोग (भक्तिविरहित)

विद्यायाम् = ब्रह्मज्ञान में

उ = ही (ब्रह्मज्ञान की प्राप्ति के लिये)

रताः = लगे हुए (क्लेश का अनुभव कर रहे) हैं।

ते = (अपने आत्मा को मुक्त माननेवाले) वे प्राणी

ततः = पहले बतलाये गये, कर्मजड जनों के लिये सुलभ, अन्धतम से भी

भूय इव = अधिक-जैसे

तमः = मोहान्धकार में

प्रविशन्ति = प्रवेश करते हैं।



(मिलना-मिलाना कुछ नहीं और मृगतृष्णा के समान व्यर्थ प्रयास करना पड़ता है तथा उस प्रयास के अनन्तर भी पुनः पतन हो जाता है। शुष्कज्ञानी बार-बार ऐसा करते रहते हैं, अतः उस प्रयास को अन्धतम से अधिकजैसा बताया गया है। ब्रह्मा इन्द्र आदि देवताओं ने श्रीमद्भागवत के—

"येऽन्येऽरविन्दाक्ष! विमुक्त मानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः"

इस श्लोक में कहा है कि विमुक्तमानी लोग प्रभु के चरणों का आदर न करने से ऊंचे चढ़ कर गिरते हैं।

**अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१०॥**

इदानीं भगवत्संबन्धिज्ञानकर्मणोः फलमलौकिकमिति बोधयितुमाह—

**ये** आचार्याः । **नोऽस्माकमुपनिषदाम्** । **तत्** सेव्यं ब्रह्म । **विचचक्षिरे** व्याख्यातवन्तः । तेषां **धीराणाम्** । वचनमिति शेषः । **इति** = अनेन प्रकारेण । **शुश्रुम** श्रुतवन्त्यः वयमुपनिषदः । किं त आहुः ? **विद्यया** ब्रह्मज्ञानेन । **अन्यदेव** पृथगेव फलं भगवत्कृपापात्रैकवेद्यमेव भवतीत्याहुः । **एवमविद्यया** कर्मणाऽप्यन्यदेव पृथगेव भगवत्कृपापात्रैकवेद्यमेव फलं भवतीत्याहुः ।

तच्च फलं क्रमशो भगवन्मतिः, भगवत्तोषात्मकं च बोद्धव्यम्, "तत्कर्म हरितोषं यत्साविद्या तन्मतिर्यया" इत्युक्तेः । भगवद्विषयकमतित्वञ्च निष्किञ्चनमहीयःपादरजोऽभिषेकवरणप्रयोज्योरुक्रमाङ्घ्रिविषयकत्वम्, "नैषां मतिस्तावदुरुक्रमाङ्घ्रिम्" इति भागवते प्रह्लादोक्तेः । ज्ञानकर्मणोस्तादृशफलजनकत्वरूपं तत्त्वं ज्ञातव्यमिति भावः ॥१०॥

## भाषा

ये = जिन आचार्यों ने

नः = हमारे लिये

तत् = उपनिषदों के सेव्य ( प्रतिपाद्य ) उस परब्रह्म परमात्मा श्री पुरुषोत्तम का

विचचक्षिरे = व्याख्यान किया (स्वरूप बतलाया) है

धीराणाम् = उन धीर पुरुषों के ( वचन )

इति = इस प्रकार

शुश्रुम = सुने हैं कि

विद्यया = ब्रह्मज्ञान ( श्रीपुरुषोत्तमविषयक ज्ञान ) का

अन्यत् = कुछ अन्य

एव = ही ( जिसे केवल भगवत्कृपापात्र ही जान सकते हैं ) फल होता है । इसी प्रकार

अविद्यया = कर्म का ( भी )

अन्यत् = कुछ और

( एव ) = ही ( जिसे भी केवल भगवत्कृपापात्र ही जान सकते हैं ) फल होता है ।

( वह फल "तत्कर्म हरितोषं यत्" और "सा विद्या तन्मतिर्यया" के अनुसार क्रमशः ज्ञान का फल भगवद्विषयिणी मति और धर्म का फल भगवत्प्रीति है । निष्किञ्चन भगवद्भक्तों के चरणकमलों की धूलि से अभिषेकपूर्वक उरुक्रम भगवान् के पदपद्मों का आश्रयण ही भगवद्-विषयिणी मति है। जैसा कि "नैषां मतिस्तावदुरुक्रमाङ्घ्रिम्" आदि श्रीमद्भागवत में वर्णित प्रह्लादोक्ति से स्पष्ट है ॥१०॥

**विद्यां चाविद्यां च यस्तद्वेदोभयँ सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥११॥**

विद्याविद्ययोस्तत्त्वं संकेतेनोक्त्वा तथाविधतत्त्वविशिष्टयो-स्तयोर्वेदनफलमाह—

यः कश्चिद् भगवत्कृपाभाजनं पुरुषः । **विद्यां** ब्रह्मज्ञानम् । **अविद्यां** कर्म । **तत्** पूर्वमन्त्रसंकेतिततत्त्वविशिष्टमेतदुभयम् । **सह** भगवद्विषयकत्वेन सहचरितम् । **वेद** जानाति । **सः** । **अविद्यया** भगवद्विषयकत्वेनविद्यासहचरितत्वप्रकारकवेदनविषयी-भूतेन कर्मणा । **मृत्युं** संसारम् । **तीर्त्वा** । **विद्यया** भगवद्-विषयकत्वेन कर्मसहचरितत्वप्रकारकवेदनविषयीभूतेन ब्रह्मज्ञानेन । **अमृतं** स्वरूपं त**मश्नुते** अनुभवति ॥ ११ ॥

### भाषा

यः = जो कोई भगवत्कृपापात्र

विद्याम् = ब्रह्म ( श्रीपुरुषोत्तम ) विषयक ज्ञान
च = और
अविद्याम् = कर्म ( पूर्व मन्त्र में संकेतित तत्त्वसे युक्त )
तत् = उन
उभयम् = दोनों को
सह = भगवद्विषयक होने के कारण सहचरित
वेद = जानता है ।
( सः ) = वह
अविद्यया = भगवद्विषयक होने के कारण विद्या से युक्त कर्म से
मृत्युम् = संसार को
तीर्त्वा = तरकर
विद्यया = भगवद्विषयक होने के कारण कर्म से युक्त ज्ञान के विषयीभूत ब्रह्मज्ञान से
अमृतम् = रसरूप उन श्रीपुरुषोत्तम का
अश्नुते = अनुभव करता है ॥ ११ ॥

**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।**
**ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥१२॥**

अथ विरुद्धधर्माश्रये भगवत्येकतरधर्माश्रयत्वाग्रहस्यानर्थहेतुकत्वेन हेयत्वमाह—

ये सर्वभवनसमर्थत्वेन भगवन्तमजानानाः । **असम्भूतिमसम्भवमुपासते** आगृह्णन्ति । न हि व्यापकस्यैकदेशित्वम्, न हि निराकारस्य साकारत्वम, नहि निर्गुणस्य सगुणत्वम्, नह्यप्रमेयस्य प्रमेयत्वं सम्भवतीति प्रत्यवतिष्ठन्ते । ते **अंधं तमः** पूर्वोक्तम **प्रविशन्ति** । ये च कुतर्ककदर्थितकुमतिकाः **सम्भूत्या** सम्भवे । उ एव । **रताः** साग्रहाः । नन्दगोपसुतस्य प्राकृतत्वं सम्भवति, पर-

दारपरामर्शिनोऽसाधुत्वं सम्भवति, रासरसिकस्य विषयित्वं सम्भवति, सुरतरतस्य स्खलितसौरतत्वं सम्भवति, इत्यादि दुर्भावनाभाविता इति भावः। ते आत्मवञ्चकास्ततः पूर्वोक्तात्तमसो भूय इव प्रचुरमेव तमो मोहं प्रविशन्तीति शेषः। तमसि भूयस्त्वं नाम भगवन्निन्दाप्रयोज्यत्वेनेयत्तानवच्छिन्नत्वम्, "भगवन्निन्दया वेनः" इत्युक्तेरित्यूह्यम् ॥ १२ ॥

## भाषा

विरुद्धधर्माश्रय भगवान् श्री पुरुषोत्तम में किसी एक धर्म के आश्रय का आग्रह अनर्थ का कारण है, अतः उसकी हेयता बतलाते हैं—

( भगवान् श्री पुरुषोत्तम सर्वरूप हो सकते हैं, एवं सब कुछ कर सकते हैं, इस प्रकार उनके स्वरूप को न जाननेवाले )

ये = जो लोग ( व्यापक ब्रह्म एकदेशी नहीं हो सकता, निराकारब्रह्म साकार नहीं हो सकता, निर्गुण ब्रह्म सगुण नहीं हो सकता, अप्रमेय ब्रह्म प्रमेय नहीं हो सकता आदि )

असंभूतिम् = असंभव को

उपासते = ग्रहण करते हैं ( निश्चित करते हैं )

ते = वे ( पहले बतलाये गये- )

अन्धं तमः = गाढान्धकार में

प्रविशन्ति = प्रवेश करते हैं।

च = और

ये = कुत्सित तर्कों से कदर्थित एवं दूषितबुद्धि जो प्राणी ( नन्द गोप के पुत्र को प्राकृत होना चाहिये, परदाराओं के स्पर्शकर्ता को असाधु होना चाहिये, रासरसिक को विषयी होना चाहिये, स्त्रीप्रसंग में प्रीति करनेवाले को अचिरसौहृद होना चाहिये—आदि )

सम्भूत्यां = सम्भव में

उ = ही

रताः = प्रीति करते हैं। ( कुत्सित भावनाओं से भावित, आत्मा का प्रतारण करनेवाले )

ते = वे लोग

ततः = पूर्वोक्त अज्ञान से

भूय इव = अधिक-जैसे

तमः = अज्ञान में

प्रविशन्ति = प्रवेश करते हैं।

( भगवान् श्रीपुरुषोत्तम की निन्दा करना ही तम का भूयस्त्व है, जिसका परिमाण नहीं है। राजा वेन ऐसा ही पापी था, जो ब्राह्मणों के शाप से अधिकतम में जाकर पतित हुआ था, जैसाकि "भगवन्निन्दया वेनो द्विजैस्तमसि पातितः" आदि वचनों से स्पष्ट है )

**अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३॥**

अथ भगवद्विषये सम्भवासम्भवयोरसम्भवसम्भवात्मकत्वमाह—

ये साक्षात्कृतभगवत्स्वरूपा आचार्याः। **नोऽस्माकमुपनिषदाम्**। **तत्** सेव्यं ब्रह्म। **विचचक्षिरे** व्याख्यातवन्तः। तेषां **धीराणां** भगवन्माहात्म्यविषयकधीमताम्। **सम्भवात्** तर्कितसत्त्वादन्यदेव भिन्नमेव भगवद्विषयकत्वेनासम्भवरूपमेवाहुः। शिष्टा इति शेषः। **असम्भवात्** अतर्कितसत्त्वात्। **अन्यदेव** भिन्नमेव भगवद्विषयकत्वेन सम्भवरूपमेवाहुः। शिष्टा इति शेषः। इत्येवंप्रकारकवाक्यं **शुश्रुमः** श्रुतवन्तो वयमुपनिषदः।

भगवतः सर्वंभवनसमर्थत्वेन विरुद्धधर्माणामपि सामानाधिकरण्यस्य सूपपादत्वात्, "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"

"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिश्रुतिशिरः सिद्धान्तप्रामाण्यात्, "न हि विरोध उभयं भगवत्यपरिगणितगुणगणेश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनकुतर्कंकलिलान्तःकरणवादिविवादानवसरे" इति भागवतोक्तेश्चेति भावः ॥१३॥

भाषा

ये = जिन आचार्यों ने

नः = हमारे लिए

तत् = उपनिषदों के सेव्य ( प्रतिपाद्य ) उस परब्रह्म परमात्मा श्री पुरुषोत्तम का

विचचक्षिरे = व्याख्यान किया ( स्वरूप बतलाया ) है ( उन शिष्टों ने )

धीराणाम् = भगवन्माहात्म्य के जानने वाले उन धीर पुरुषों के

सम्भवात् = तर्कित ( विचार ) से

अन्यत् = भिन्न

( भगवद्विषयक होने के कारण असम्भवरूप )

एव = ही

आहुः = बतलाया है । ( तथा उन धीर पुरुषों के )

असम्भवात् = अतर्कित से

अन्यत् = भिन्न ( भगवद्विषयक होने के कारण सम्भवरूप )

आहुः = बतलाया है । ( हम मन्त्रों ने )

इति = ऐसा

शुश्रुम = सुना है ।

भगवान् श्रीपुरुषोत्तम सर्वरूप होने में समर्थ हैं, अतः उनमें विरुद्ध धर्मों का समावेश भी अच्छी तरह हो सकता है ।

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"

"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः"

"श्रीपुरुषोत्तम के हजारों शिर, नेत्र, और पैर हैं" "वह पैर न होते हुए भी वेग से चलता है, हाथ न होते हुए भी ग्रहण कर सकता है, आंख न होते हुए भी देख सकता है, कान न होते हुए भी सुन सकता है।" आदि वेदवाक्यों के प्रमाणभूत सिद्धान्तों ने यही सिद्ध किया है।

अगणित गुण-गणों के ईश्वर, दुष्प्रवेश्यमहात्म्य, आधुनिक कुतर्कों से मलिनाःन्तकरण वादियों के विवाद के अविषय भगवान् श्रीपुरुषोत्तम में दोनों प्रकार ही अविरुद्ध हैं ॥ १३ ॥

**सम्भूतिं च विनाशं च यस्तद्वेदोभयँ सह ।**
**विनाशेनमृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥ १४ ॥**

अथ भगवद्विषयकयोरसम्भवसम्भवात्मकयोः सम्भवासम्भवयोर्वेदनफलमाह—

यः कश्चिद् भगवत्कृपाभाजनभूतः पुरुषः । सम्भूतिं सम्भवम् । विनाशमसम्भवम् । तत् पूर्वोक्तप्रकारेण विपरिवर्तितरूपम् । सह उक्तप्रकारेण सहचरितम् । वेद । स विनाशेन तथाविधवेदनविषयीभूतेनासम्भवेन । मृत्युं संसारम् । तीर्त्वा । सम्भूत्या तथाविधवेदनविषयीभूतसम्भवेन । अमृतं रसात्मकं तमश्नुते अनुभवति ॥ १४ ॥

## भाषा

भगवद्विषयक असम्भव और सम्भवरूप सम्भव तथा असम्भव के ज्ञान का फल कहते हैं—

यः = जो कोई भगवत्कृपापात्र
सम्भूतिम् = पूर्वोक्त सम्भव
च = और
विनाशम् = असम्भव
उभयम् = दोनों को

सत् = पहले पद्य में बतलाई गई रीति से असम्भव और सम्भवरूप में
सह = सहचरित ही
वेद = जानता है ( वह )
विनाशेन = तथाविध ज्ञान के विषयीभूत असम्भव से
मृत्युम् = संसार को
तीर्त्वा = पारकर
सम्भूत्या = तथाविध ज्ञान के विषयीभूत सम्भव से
अमृतम् = रसरूप श्री पुरुषोत्तम का
अश्नुते = अनुभव करता है ॥ १४ ॥

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**

**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥१५॥**

अथ केन प्रकारेणामृतमश्नुत इति बोधयितुं प्रागुक्तपरमफलरूपस्य विरहानुभवावस्थाविशेषस्य व्रजाङ्गनाजननिष्ठत्वेन भावितस्यैवामृताशनरूपतेति ख्यापयितुं तादृशविरहानुभवं तदुक्त्यैवाह—

हे **पूषन्**! पोषणकर्त्तः, स्वजन्मना व्रजाधिकजयकारित्वेवानुग्राहिन्, विरहानुभविभक्तजनेषु दयार्द्रहृदयेति वा । **हिरण्मयेन** सुवर्णप्रचुरेण । पत्रमिव प्रतिकृति पात्रम्, तेन **पात्रेण** तदाकृतिश्रीमुकुटेन । आ-ईषत् पिहितम्-**आपिहितम्** । तस्य किञ्चिद् भुग्नत्वात् किञ्चिदावृतम् । **सत्यस्य** ब्रह्मणः श्रीपुरुषोत्तमस्य ते । तदनिवचनीयचारुत्वविशिष्टम् । **मुखं** जलरुहाननम् । **सत्यस्य** तव धर्माय, अंशत्वेन धर्मभूताय मह्यं जीवात्मने । जीवमनुग्रहीतुमित्यर्थः । 'क्रियार्थोपपदस्ये' ति कर्मणि चतुर्थी । **दृष्टये** तावकानां चाक्षुषज्ञानाय । **त्वं** दयितः । **अपावृणु** आविर्भावय ॥ १५ ॥

**भाषा**

उस रसस्वरूप अमृत का उपभोग किस प्रकार किया जा सकता है यह बतलाने के लिए पूर्वोक्त परमफलरूप श्री पुरुषोत्तम के विरहानुभवरूप अवस्थाविशेष का व्रजाङ्गनाओं की भावना से अनुभव करने पर ही

अमृताशनरूपता होती है यह बताने के लिये यह बात उन्हीं की उक्ति के रूप में बतलाते हैं-

( अपने जन्म से व्रज की अधिक जय करने के कारण )

पूषन् = हे कृपा करनेवाले भगवन्

हिरण्मयेन = सुवर्णमय ( सोने के बने )

पात्रेण = पत्राकृति श्रीमुकुट से (उसके कुछ टेढ़ा होने के कारण)

आपिहितम् = किञ्चित् ढके हुए

सत्यस्य = सत्यस्वरूप परब्रह्म परमात्मा श्रीपुरुषोत्तम आप के

तव = अनिर्वचनीयसौन्दर्यशाली

मुखम् = श्रीमुख को

दृष्टये = दर्शनार्थ ( एवं )

सत्यधर्माय = सत्य स्वरूप आपके धर्मभूत मुझ जीवात्मा पर अनुग्रह करने के लिये

त्वम् = आप

अपावृणु = प्रकट करिए ॥ १५ ॥

**पूषन्नेकर्षे ! यम ! सूर्य ! प्राजापत्य ! व्यूह रश्मीन्, समूह तेजो, यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोहमस्मि ॥१६॥**

अथ विरहकालिकीं फलावस्थामनुभवितृमुखेनाह—हे पूषन् ! विषजलाप्ययादिभ्यो मुहू रक्षकत्वेनानुग्राहिन् !। एकर्षे ! पतिसुतान्वयादि विलङ्घ्य तेऽन्त्यागता अस्मान् विहायैकाकित्वेन गन्तः ! यम ! सरसिजोदरश्रीमुषा दृशा निहननेन यातनादायिन् ! सूर्य ! बिभ्यदस्मत्कर्कशस्तनस्थापितपरमसुकोमलचरणकृतकूर्पादि-मथविपिनसरण ! हृदयतपन ! प्राजापत्य ! प्रजापतेर्विखनसोऽनु-ग्रहायागत !। त्रिभ्वगुप्तये प्रार्थितत्वेन सात्वतां कुले प्रादुर्भूत !। रश्मीन् निजजनस्मयध्वंसनीभूतस्मितकिरणान्। व्यूह विशिष्ट-तर्कविषयीकुरु। विशिष्टतर्कश्च युक्त्या अर्थनिर्णयः। स च स्मितेनैव दर्पध्वस्तव्ये तद्ध्वंसनायान्तर्धानमयुक्तमित्याकारकः।तेजो योयम्।

समूह सम्यक् तर्कविषयीकुरु । सम्यक् तर्कस्तु युक्त्या धर्मनिर्णयः । स च व्रजजनार्तिहन्तृत्वसामानाधिकरण्येन प्रसिद्धस्य वीर्यस्य व्रजजनार्तिकर्तृत्वसामानाधिकरण्ये सति स्वरूपहानिप्रसंगाद् विरहेणार्तिकर्तृत्वेमयुक्तिसहमित्याकारकः । यत्ते सख्युः । कल्याणतमं विरचिताभयश्रीकरग्रहकामदकरसरोरुह–प्रणतदेहिपापकर्षण-तृणचरानुग-श्रीनिकेतन-फणिफणार्पित-पद्मजार्चित-धरणिमण्डनपदाम्बुज–चारुजलरुहानन–पुष्करेक्षण-श्रीधामवक्षस्कं परमसुन्दरमानन्दमात्रकरपादमुखोदरं रूपं स्वरूपम् । तत् अनिर्वचनीयरामणीयकम् । ते तावकम् । पश्यामि अनुभवामि । तत्तदङ्गेषु तत्तदङ्गार्पणेन महानन्दाब्धिगाहनमनुभवामीत्यर्थः ।

अथास्मन्नवस्थाविशेषेऽखण्डब्रह्मात्मकत्वस्फूर्तिमाह मन्त्रः-योसावसाविति । यः पूतनास्तनपानकर्ता, असौ सखिस्कन्धन्यस्तस्वभुजो ललितगतिः, असौ वातवर्षत्राणकर्ता गोवर्धनधरः, पुरुषः खलदण्डदपौरुषविशिष्टः, स उलूखलबद्धत्वादिना सभयादिस्वरूपः कृष्णोऽहमस्मि । सेयमखण्डशुद्धाद्वैतभावेन परमानन्दानुभूतिः परमं फलमिति भावः ॥१६॥

## भाषा

पूषन् != हे विषमय जल आदि द्वारा होनेवाले विनाशादि से बार-बार रक्षा करने के कारण कृपा करनेवाले!

एकर्षे != पति, पुत्र, परिवार आदि का उल्लंघन कर तेरे समीप आई हुई हमें छोड़कर अकेले चले जानेवाले,

यम != कमल के मध्यभाग की शोभा को चुराने वाली दृष्टि से मारने के कारण यातना देनेवाले!

सूर्य != हमारे अति कठिन स्तनों पर भयपूर्वक स्थापित अपने अतिकोमल चरणकमलों से कण्टकमय वनभूमि में भ्रमण कर हमारे हृदय को तपानेवाले!

प्राजापत्य != विश्व की रक्षा के लिये ब्रह्माजी द्वारा प्रार्थना किये जाने पर यादव-कुल में अवतीर्ण होनेवाले (स्वामिन्!)

रश्मीन् = अपने भक्तों के गर्व को ध्वस्त करनेवाली स्मितकिरणों को

व्यूह = विशिष्ट तर्क का विषय बनाइए। ( युक्ति से अर्थ का निर्णय ही विशिष्ट तर्क है। जबकि अपनी मन्द मुसकान से ही गोपियों का गर्व दूर किया जा सकता था, उसके दूर करने के लिये अपना अन्तर्हित हो जाना अत्यन्त अनुपयुक्त था। यह विशिष्ट तर्क का स्वरूप है। )

तेजः = सामर्थ्य को,

समूह = सम्यक् तर्क का विषय बनाइए। ( युक्ति से धर्म का निर्णय ही सम्यक् तर्क है, जो भगवद्वीर्य व्रजजनों की पीड़ा के निवारण में समर्थ है, वही यदि उन्हें पीड़ित करने लगे, तो उसमें स्वरूपहानि की सम्भावना है। आपके विरह से पीड़ा का होना युक्तियुक्त नहीं है, अतः इसे निवृत्त करना आपका धर्म है यह सम्यकतर्क का स्वरूप है )

यत् = जो

ते = सखा के रूप में स्थित आपका

कल्याणतमम् = मङ्गलमय अभयदायी लक्ष्मीकरग्राही मनोरथप्रद करकमल से युक्त, प्रणत प्राणियों के पापनाशक, गायों के अनुगामी, शोभा के धाम, काली की फणाली पर विन्यस्त, पद्मजा से पूजित, भूमिभूषण पदपद्म से युक्त, सुन्दर कमल के समान मुख से युक्त तथा विशाल नेत्र एवं लक्ष्मी के निवासस्थान वक्षस्थल से युक्त और जिसके कर, चरण, मुख, उदर आदि प्रत्येक अवयव आनन्दमात्र हैं ऐसे—

तत् = उस अनिर्वचनीय सौन्दर्यशाली

ते = आपके

रूपम् = ( स्वरूप को )

पश्यामि = देख रहा हूँ ( अपने तत्तत् अवयवों पर आपके तत्तत् अङ्गों को रखकर आनन्द का अनुभव कर रहा हूँ। )

यः = जो पूतना के स्तनों का पीनेवाला,

असौ = सखा के कन्धे पर अपनी भुजा को रखकर ललित गति से चलनेवाला,

असौ = गोवर्धन को धारण करके वात-वर्षादि से रक्षा करनेवाला,

पुरुषः = दुष्टों के दमन में सामर्थ्यशाली

सः = उलूखलबन्धनादि के कारण भयभीत-सा दिखलाई पड़नेवाला श्रीकृष्ण हैं ( वह )

अहम् = मैं

अस्मि = हूँ ।

( इस प्रकार यह मन्त्र भगवद्विरह के समय अखण्ड ब्रह्मात्मक भाव की स्फूर्ति बतलाता है । यह अखण्ड शुद्धाद्वैतभाव के द्वारा परमानन्द के अनुभव की प्राप्ति ही भक्तों का परम फल है—यह है इस कथन का तात्पर्य । ) ॥ १६ ॥

किञ्च—

**वायुरनिलममृतमथेदं भस्मान्तँ शरीरम् ।**
**ओं क्रतो! स्मर कृतँ स्मर क्रतो! स्मर कृतँ स्मर ॥१७॥**

**वायुः**कान्ताङ्गसङ्गकुचकुङ्कमरञ्जितकुन्दस्रगगान्धवहः पवनो वातीति शेषः । तव **अनिलम्** वागगम्यम्, 'गोभूवाचस्त्विडा इलाः' इत्यमरः । **अमृत**मधरामृतं वितरेति शेषः । **अथ** पक्षान्तरे । अधरामृतालाभे तु **इदं शरीरं भस्मान्तं** विरहजाग्न्युपभुक्तं स्यादिति शेषः । अवतीत्योम् । **ओं** ! रक्षक ! करोति स्वीकरोतीति **क्रतु**-स्तत्संबुद्धौ हे **क्रतो!** स्वीकर्तः ! **स्मर** भवतः किङ्करीरिति शेषः । **कृतं** पतिसुतान्वयभ्रातृबान्धवातिविलङ्घनपूर्वकत्वदन्त्यागमनरूपमस्म-दाचरितं स्मर । युक्तं हि स्वीकर्तुः स्मर्तृत्वम् । विरहावस्थाया निरतिशयत्वबोधनाय आतुरत्वद्योतिका द्विरुक्तिः ॥ १७ ॥

## भाषा

वायुः = कान्ता के अङ्गसङ्ग के सूचक कुचकुंकुम से रञ्जित कुन्द की माला के गन्ध को फैलानेवाला वायु ( चल रहा है, अतः )

अनिलम् = बाणी के अगोचर अर्थात् अवर्णनीय

अमृतम् = अधरामृत को ( प्रदान करिए )

अथ = यदि हमें तेरा अधरामृत प्राप्त न होगा, तो

इदम् = यह ( हमारा )
शरीरम् = शरीर
भस्मान्तम् = तेरे विरह से उत्पन्न अग्नि से भस्म हो जायगा।
ओम् = हे ( हमारे ) रक्षक ( तथा )
क्रतो = ( हमें ) स्वीकार करनेवाले
स्मर = ( तू ) अपनी सेविकाओं का स्मरण कर
कृतम् = ( हम ) पति, पुत्र, भाई, बन्धु, कुलमर्यादा आदि का उल्लंघन कर तेरे समीप आई हैं, तू हमारे किये हुए को
स्मर = याद कर ( स्वीकारकर्ता का अपने स्वीकृतका स्मरण रखना युक्त ही है। )

( द्विरुक्ति विरहावस्था की सर्वाधिकता की द्योतक है ) ॥ १७ ॥

**अग्ने! नय सुपथा राये अस्मान्विश्वानि देववयुनानि विद्वान्।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १८ ॥**

अथ वेदाख्यब्रह्मणः श्रीपुरुषोत्तमहार्दरूपत्वात् तदभिव्यक्तेश्च तन्मुखारविन्दरूपाग्न्येकभाव्यत्वात, किञ्च 'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ती'त्युक्तदिशा पूर्वोक्तफलस्य तदेकदानार्हत्वात, हार्दजिज्ञासुमहाभागानां तत्प्रार्थनस्य परमावश्यकत्वं बोधयन् गुरुगौरवप्रदर्शनार्थमन्तिममन्त्रेण तं प्रार्थयते श्रुतिः—

**अग्ने !** हे पुरुषोत्तममुखारविन्द ! **अस्मान्** श्रीपुरुषोत्तमहार्दजिज्ञासून्। **सुपथा** शोभनेन मार्गेण। मार्गे शोभनत्वं च श्रीपुरुषोत्तमानुग्रहालिङ्गितत्वम्। आलिङ्गितत्वं च स्वसामानाधिकरणदैवजीवसमुद्धारेच्छाप्रयोज्याभिव्यक्तिविषयत्वसम्बन्धेन। समुद्धारश्च स्वहार्दाभिव्यञ्जनप्रयोज्योत्तरशृङ्गाररसानुभवः।

**राये** सर्वोत्तमधनरूपाय भगवते। यथोक्तम् श्रीहरिरायचरणैः—
"पुष्टिमार्गे हरेर्दास्यं धर्मोऽर्थो हरिरेव हि।"

'क्रियया यमभिप्रैति सोऽपि संप्रदानम्' इति चतुर्थी।
**नय** प्रापय। अग्नेरेव तथा कर्तुं शक्तत्वमाह-यतस्त्वं **विश्वानि** यावन्ति

देवस्यरासक्रीडाकर्तुः श्रीपुरुषोत्तमस्य वयुनानि क्रीडावैदग्ध्यानि। विद्वान् जानानः, असीति शेषः। अस्मत् अस्मत्तः। जुहुराणं स्वरूपविस्मारकत्वाज्जिह्मम्। एनः पापं भगवद्वैमुख्यरूपम्। युयोधि वियोजय। अनाविर्भावदशायामन्यत्कर्तुमशक्ता वयं ते तुभ्यं त्वामनुकूलयितुमित्यर्थः। 'क्रियार्थोपपदस्ये'ति चतुर्थी। भूयिष्ठाम् सश्रद्धत्वेन पौनःपुन्येन च बहुतराम्। नमउक्तिम् नमोवाकम्। विधेम कुर्मः।

इत्युपनिषत्। इतिः समाप्तौ। उप भगवत्समीपे निषीदति तदाज्ञापालनार्थं तिष्ठतीत्युपनिषत्। युक्तं च सेविकायाः सेव्यसमीपावस्थानं तदन्वर्थकं नाम च॥ १८॥

ईशोपनिषदो व्याख्या भगवद्गुणवर्णिनी।
समाप्ता श्रीमदाचार्याज्ञापिताशयबोधिनी॥
अपेयं पुष्टिमार्गीया अपेयं पुष्टिजीवनम्।
बिभर्तीत्येष विश्वासः श्वासः श्वासार्थिनो मम॥

इति शुभम्।

## भाषा

वेद परब्रह्म परमात्मा श्रीपुरुषोत्तम के हृदयरूप हैं। उनकी अभिव्यक्ति केवल श्रीपुरुषोत्तम के मुखारविन्दरूप अग्नि (श्रीआचार्य) से ही होसकती है इसलिये और पूर्वोक्त विरहानुभवरूप फल वैश्वानरावताररूप श्रीवल्लभाचार्य द्वारा ही दानयोग्य होने के कारण श्रीपुरुषोत्तम के हृदयाभिप्राय के जिज्ञासु महानुभावों को श्रीमहाप्रभुजी की प्रार्थना अत्यन्त आवश्यक है इस बात को बतलाता हुआ मन्त्र अन्त में उनकी स्तुति करता है—

अग्ने = हे श्रीपुरुषोत्तम के मुखारविन्द!

अस्मान् = (उन वेदों अथवा श्रीपूर्णपुरुषोत्तम के हृदयाभिप्राय के जिज्ञासु) हमलोगों को

सुपथा = सुन्दरमार्ग से ( श्रीपुरुषोत्तम के अनुग्रह से आलिङ्गित होना ही मार्ग की सुन्दरता है, तथा दैवीजीवों के उद्धार की इच्छा से होनेवाली अपनी अभिव्यक्तिही अनुग्रहालिङ्गितता है। एवं अपने हृदयाभिप्राय की अभिव्यक्ति के अनन्तर होनेवाला भगवान् के विरह का अनुभव ही दैवजीवों का उद्धार है ) अतः

राये = सर्वोत्तमधनरूप भगवान् के लिए अर्थात् भगवान् के समीप

नय = पहुँचाइए।

( आप ही ऐसा करसकते हैं, अन्य कोई नहीं इस विषय में युक्ति बतलाते हैं—क्योंकि आप )

विश्वानि = जितने भी

देववयुनानि = रासक्रीडा करनेवाले श्रीपुरुषोत्तम के क्रीडाचातुर्य हैं उन्हें

विद्वान् = जानते हैं। और

अस्मत् = हम से

जुहुराणम् = ( भगवत्स्वरूप को भुलाने के कारण ) कुटिल

एनः = विमुखतारूप पाप को

युयोधि = दूर करिए।

(भगवत्प्राकट्य न होने की अवस्था में हम और कुछ नहीं करसकते)

ते = तुझे प्रसन्न करने के लिये

भूयिष्ठाम् = श्रद्धापूर्वक और बार-बार करने से अत्यधिक

नमउक्तिम् = नमस्कार की उक्ति

विधेम = करते हैं।

इति शब्द समाप्ति का द्योतक है।

भगवान् के समीप उनकी आज्ञापालन के लिये जो स्थित हो वह उपनिषद् है। ( सेविका का अपने सेव्य के समीप रहना युक्त ही है, अतः 'उपनिषत्' यह नाम सार्थक है ) ॥ १८ ॥

( समाप्त )



गोस्वामी

## श्री १०८ श्री पुरुषोत्तमलालजी महाराज

श्री बड़ेमहाप्रभु जी का मन्दिर, कोटा ( राजस्थान )

की

## शुभ संमति

**श्री शास्त्री पं० सबलकिशोर जी, मथुरा**

शुभाशीर्वादाः । ईशावास्योपनिषद् की व्याख्या का आविष्कार जो तुम्हारे द्वारा हो रहा है वह प्रशंसनीय है । साम्प्रदायिक सिद्धान्तों के प्रचार की दृष्टि से इस ग्रन्थ के प्रचार की विशेष आवश्यकता है । किमधिकम् ।